र्गः यत्र स्वार्थो भवति, स तत्राख्यातमपेक्षते। नामाख्याते सर्वं विशेषं प्रत्युपसर्गसंयोगमपेक्षेते। तस्मादुपसर्गस्योपसर्गत्वं क्रियाविशेषोऽर्थः। क्रियाणामाख्यातमाख्यातमेवेति ॥

तत्र यदुक्तम् 'अनर्थकाः पृथगुपसर्गा उपसर्गाः'—इति तदयुक्तम्। कुतः? "तत्र एतु पदार्थः प्रादुरिमे तम्"। तदुपपन्नं भवति। स एषूपसर्गेषु योऽर्थोऽभिप्रकाशोऽयं इति प्राप्तुं तस्मिन उपसर्गाः पदविशेषाः पृथगपि सन्तः ॥

कः पुनरस्यार्थ इति? उच्यते,—"नामाख्यातयोरर्थविकरणम्" अर्थविक्रियामित्यर्थः। तस्मादर्थवन्त एवेति ॥४॥

आ इत्यर्वागर्थे प्रपरेत्येतस्य प्रातिलोम्यमभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्यमति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यं न्यवेति विनिग्रहार्थीयौ उदित्येतयोः प्रातिलोम्यं समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्यमन्विति सादृश्यापरभावमपीति संसर्गमुपेत्युपजनं परीति सर्वतोभावमधीत्युपरिभावमैश्वर्यं वैवमुच्चावचानर्थान् आहुस्त उपेक्षितव्याः ॥ ५ ॥

प्रथमाध्यायस्य प्रथमः पादः ॥ १, १ ॥

उच्यतां तर्हि क एषां कस्मिन्नर्थविशेषे वर्तते? उच्यते,—अयं तावत्—"आ इत्यर्वागर्थे"। तद्यथा,—आ पर्वतादिति।

र्गगिति गम्यते। अनेकार्थत्वेऽपि सत्युपसर्गाणामेकैकोऽर्थ
हरणत्वेनोच्यतेऽर्थयत्त्वप्रकाशनार्थम् ॥

"प्रपरेत्येतस्य प्रातिलोम्यम्"। प्रपरा-इत्येतावुपसर्गावेतस्यै-
होऽर्थस्य प्रातिलोम्यमाहतुः। प्रगतः परागतः ॥

"अभीत्याभिमुख्यम्"। आह। अभिगतः ॥

"प्रतीति" "एतस्य" एव अभेः "प्रातिलोम्यम्" आह। प्रति-
इति ॥

"अतिसु-इत्येतावभिपूजितार्थे" वर्तेते। अतिधनः सुब्राह्मण
॥

"निर्दु रित्येतयोः प्रातिलोम्यम्"। निर्धनो दुर्ब्राह्मण इति ॥

"न्यवेति विनिग्रहार्थीयौ"। निगृह्णाति। अवगृह्णातीति ॥

"उदिति" अयमेक एव "एतयोः" द्वयोः "प्रातिलोम्यम्"
। उद्गृह्णातीति ॥

"समित्येकीभावम्" अर्थमाह। संगृह्णातीति ॥

"व्यपेत्येतस्य प्रातिलोम्यम्" आहतुः। विगृह्णातिविग्रहार्थीयः
ह्णाति, अपगृह्णातीति ॥

'अन्विति सादृश्यापरभावम्" आह। अनुरूपमन्येदमिति
यम्। अनुगच्छतीत्यपरभावः ॥

'अपीति संसर्गम्" आह। सर्पिषोऽपि स्यात्। मधुनोऽपि
॥

उपेत्युपजनम्"। उपजायते ॥

परीति सर्वतोभावम्" आह। परिधावतीति ॥

"अधीत्युपरिभावम्" आह। "ऐश्वर्य्यं वा"। अधितिष्ठति, अधिपतिरिति ॥

आह,—नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीत्युक्तम्। अत्र नाम्नः कर्मोपसंयोगद्योतका भवन्तीत्येवं न गृह्यते। "उपसर्गाः क्रियायोगे (पा० १, ४, ५६)"—इति प्रसिद्धो ह्युपसर्गाणां क्रियापदेन योगो न नाम्ना। उपसर्गा हि क्रियाकृत्येतै नामान्याख्यातानीति ॥५॥

इति जम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ निरुक्तव्याख्यायां षष्ठ्याध्यायस्य [प्रथमाध्यायस्य] प्रथमः पादः ॥१॥

—:—

## द्वितीयः पादः ॥

अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणास्तेषामेते चत्वार उपमार्थे भवन्तीति भाषायाश्चान्वध्यायश्चाग्निरिवेन्द्र इवेतिनेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायन्नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यन प्रतिषधति दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते ॥ १ ॥

"अथ निपाताः"। उक्तमुपसर्गलक्षणं सामान्यम् (२४ पृ०), "नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति"—इति, विलक्षणमपि (३६-३७ पृ०),—"आ इत्यर्वागर्थे" इत्येवमादि। ॥ इति कृत्वा च ते प्रत्येकं समाम्नाताः। अधुना सामान्यणानुयुक्तं प्रतिज्ञाप्रसक्तमेव निपातलक्षणं वर्णयिष्यामः। तद्‌गोऽयमथशब्दः॥

"उच्चावचेष्वर्थेषु निपतन्ति"। उच्चावचेष्वनेकप्रकारेष्वर्थेषु न्तीति निपाताः॥

आह,—कतमे पुनस्ते? उच्यते,—"अप्युपमार्थेऽपि कर्मोहार्थेऽपि पदपूरणाः"। उपमैवार्थ उपमार्थः, तस्मिन्नुपमार्थे। नाम,—कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुणः, तदन्यस्मिन्नद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनं सोपमा। कर्मोपसंग्रह एवार्थः कर्मोपसंग्रहार्थः, तस्मिन् संग्रहार्थे। अर्थोपसंग्रहार्थे इत्यर्थः। कर्मशब्दो हि प्रायेर्थ्यायवचन एतस्मिन्नध्याये। "गतिकर्माण उत्तरे धातवः ४)", गत्यर्था इति गम्यते। पदमेव पूरयितव्यं, येषामर्थः, पूरणाः। तदेतत् त्रिप्रकारमर्थभेदकृतं निपातानां समासेन॥

आह,—किमविशेषेण सर्वे एतस्मिन्नर्थे निपतन्ति? नेत्युच्यते। ति चत्वार उपमार्थे भवन्ति"। तेषां सर्वेषां मध्ये एते :—इव, न, चित्, नु च प्रायोवृत्त्या उपमार्थे भवन्ति॥

पुनैवमुक्त्वा भाषाच्छन्दःप्रविभागेनोदाहरणमेकैकं दर्श-समासविस्ताराभ्यां हि शास्त्राणि प्रतीयन्ते। तत्रायं

ऋग्भाजश्च भूयिष्ठाः (७, २, ६)"—इति। स एव मन्युस्तुतिभाग् एव। यथा—"अभि त्वा शूर (ऋ० सं० ५, ३, २१, २)"—इति इन्द्र एव तस्मिन्निष्केवल्ये, यथा "आपो हि ष्ठा (ऋ० सं० ७, ६, ५, १)"—इत्यपि आग्निमारुते, सूर्यादय आश्विने एवम्॥

हे 'मन्यो'! 'सहुरे' सहनशील! एतस्मिन् शत्रूणामभिभवनकाले प्रत्युपस्थिते 'हूतः' आहूतः सन् अस्माभिः, 'सेनानीः' सेनाप्रणेता 'नः' अस्माकम् 'एधि' भव। ततश्च 'अग्निरिव' 'त्विषितः' दीप्तस्त्वं तेजसा 'सहस्व' अभिभव तानस्मच्छत्रून्। 'हत्वाय' हत्वैव यदेतेषामस्मच्छत्रूणां 'वेदः' धनं तत् त्वमादाय तेषामस्मद्योधानाम् 'ओजः' बलं 'मिमानः' निर्माय यथावस्तु यथार्हं 'विभजस्व'। येऽपि च केचिद्धतावशिष्टाः 'मृधः' मृधकारिणः अस्मद्द्विषः अस्मत्तः प्रत्याजिहीर्षन्त्येतद्धनम्, तेषामोजो मिमानः तुलयित्वा कियदवशिष्टबला ह्येते न शक्ताः प्रत्याहर्तुमित्येवं मिमानस्तावन्मात्रशेषबलान् हत्वा त्वं 'विनुदस्व' एतान् दूरं प्रक्षिप अपुनरागमनाय॥

द्वितीयमुदाहरणमेतस्यैव,—"इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः। इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय॥" (ऋ० सं० ८, ८, ३१, २)। अनया चानुष्टुभा ध्रुव आङ्गिरसो राजानमभिषिषेच। 'इहैव' राष्ट्रे त्वम् 'एधि' भव। 'मा' चातस्त्वम् 'अप च्योष्ठाः'। 'पर्वत इव' 'अविचाचलिः' अविचलनशीलः। ' च 'इह' 'ध्रुवः' शाश्वतः 'तिष्ठ'। स्थित्वा च इदं 'राष्ट्रम्' एव विभूतियोगेन स्थितं 'धारय'—इत्यर्थः॥

भाषायां प्रसिद्धमेवेति कृत्वा नोदाहरणं पठितम्। अथवा एते एव। 'अग्निरिवातीक्ष्णः' 'इन्द्र इव विक्रान्तः'॥

"नेति प्रतिषेधार्थीयो भाषायाम्"। प्रसिद्धः। "उभय-मन्वध्यायम्"। "नेन्द्रं देवममंसतेति (ऋ० सं० ८, ३, २१, १)"। नेन्द्रं देवमात्मनो दीपयितारममन्यन्ताऽऽदित्यरश्मयः॥

आह,—किं पुनर्लक्षणमिति? उच्यते,—'प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति"।

"दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते"—इति। येनार्थेनोपमेयमर्थमुपमिमीते। तद्यथा,—"दुर्मदासो न सुरायामिति"। हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम्। ऊधर्न नग्ना जरन्ते॥" (ऋ० सं० ५, ७, १६, १)। काण्वो मेधातिथिराङ्गिरसश्च प्रियमेध ऐन्द्रं सूक्तं ददृशाते। तत्रैषा गायत्री। एतामपि विनियोगः क्वचिदन्यत्र नास्ति, तेऽपि चातःसोमे विनियुज्यन्ते। 'हृत्सु' 'पीतासः' पीताः सन्तो हृदयेष्ववस्थिताः सोमाः 'युध्यन्ते' सम्प्रहारमिव कुर्वन्ति। अहं विशिष्ट इत्येवं स्पर्द्धमानाः। क इव? 'दुर्मदासो न' दुर्मदाः "आज्जसेरसुक् (पा० ७, १, ५०)" यथा कुत्सितमदाः केचित् पुरुषाः सुरायां पीतायां सत्यां युध्येरन्, एवम्। किञ्च, तमेव यजमानं 'जरन्ते' स्तुवन्तीव भारमत्यामपरितुष्टाः। कथं जरन्ते? 'ऊधर्न' ऊधरिव रात्रिमिव 'नग्नाः' भूत्वा स्त्रियं मध्ययोत्यामह इत्येवमभिप्राया इव। "नग्नाः' स्तोतारः। ते च 'ऊधर्न' पयसा पूर्णं यथाहि इव इव सोमपूर्णं त्वां 'जरन्ते' स्तुवन्ति।" इति सायणः॥ केचिद्विशिष्टाः पुरुषाः॥१॥

चिदित्येषोऽनेककर्माऽऽचार्य्यश्चिदिदं ब्रूयादिति पूजायामाचार्य्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा दधिचिदित्युपमार्थे कुल्माषांश्चिदाहरेत्यवकुत्सिते कुल्माषाः कुलेषु सीदन्ति नु इत्येषोऽनेककर्मेदं नु करिष्यतीति हेत्वपदेशे कथन्नु करिष्यतीत्यनुपृष्टे नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति ॥ २ ॥

चिदित्येषोऽनेकार्थोऽपि सन्नुपमार्थीयसंयोगादत्रोदाहृतः कथमयमनेकार्थ इति? उच्यते।—"आचार्य्यश्चिदिदं ब्रूयादिति पूजायाम्"। आचार्य्यं एवं ब्रूयात्, कोऽन्य एवं वक्ष्यतीति "दधिचिदित्युपमार्थे" दधिरूप ओदन इति। "कुल्माषांश्चिदाहरेत्यवकुत्सिते"। भृशं कुत्सिते। कुल्माषानपि तावदाहरेः किं धान्यदाहरिष्यसि। "नु इत्येषोऽनेककर्मा"। कथम्? "इदं नु करिष्यतीति"। एवं हि क्रियाया हेतुर्निमित्तमित्यर्थः। कथं नु करिष्यतीति पृष्ट्वा करिष्यतीत्युक्ते यत् पुनरनुपृच्छति कथं नु करिष्यति? तदनुप्रश्नमेतस्मिन्ननुपृष्टे। "नन्वेतदकार्षीदिति च"। अनुपृष्ट एवार्थं भवतीति ॥

नन्वयमकार्षीदेतत्, कथमयं ब्रवीति कथं करिष्यतीति! "अथाप्युपमार्थे भवति" तद्यथा—॥ २ ॥

वृक्षस्य नु ते पुरुहूत वयाः वृक्षस्येव ते पुरुहूतशाखा वयाः शाखा वेतेर्वातायना भवन्ति शाखाः खशयाः

शक्नोतेर्वाऽथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहश्चेति समुच्चयार्थाभ्यां संप्रयुज्यतेऽहं च त्वं च वृत्रहन्नित्येतस्मिन्नेवार्थेऽभ्यथ पितुश्च एत्याकारो वेति विचारणार्थे हन्ताहं पृथ्वीमिमां निदधानीह वेहवेत्यथापि समुच्चयार्थे भवति पुरां त्वामनुशां त्वेति ॥ ३ ॥

"अक्षो न चक्र्योः शूर बृहन् प्र ते मह्ना रिरिचे रोदस्योः। वृक्षस्य नु ते पुरुहूत वया व्यू३तयो रुरुहुरिन्द्र पूर्वीः ॥"। (ऋ० सं० ४, ६, १७, ३)। भरद्वाजो बार्हस्पत्योऽल्पाल्पद्रुमः, पूर्णार्द्धर्चेन इन्द्रं स्तुत्वोत्तरेणोपालब्धवान्। हे 'शूर' इन्द्र! 'पुरुहूत!' महानक्ष इव चक्रयोः 'प्ररिरिचे' प्रकर्षेणातिरिच्यसे। तव 'मह्ना' महत्त्वेन विभूतिः। कुतोऽतिरिच्यसे? 'रोदस्योः' द्यावापृथिव्योः। तथापि चैवं विभूति युक्तस्य सतस्तव वृक्षकानामेवास्माकं सतां वृक्षस्येव 'वयाः' शाखाः 'पूर्वीरुतयः' भोगस्मयशागमनमार्गाः 'विरुरुहुः' खिलीभूतास्तवागमनात्। अहो कष्टं मन्दभागधेयतास्माकम्। येषां नो धनं, न तदस्ति न त्वां यजेमहि। किमत्र त्वां वक्ष्याम इति ॥ "वयाः शाखाः" –इति पर्यायवचनः। "वेनेः" वया इति निगमप्रसक्तस्य निर्वचनम्। "शाखाः खशयाः" इति पर्यायप्रसक्तस्य। व्याख्याता उपमार्थीयाः ॥

अथानन्तरं प्रतिज्ञाप्रसक्तानेव कर्मोपसंग्रहार्थान् वक्ष्यामः

"अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते, न त्वौद्देशि-
मिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः" । यस्यागमादध्या-
राद्भूयमाणस्यैव निपातस्य सरूपविरूपैकशेषादर्थतो वा 'पृथक्त्व-
मह' पृथग्भाव एव 'विज्ञायते' । तद्यथा,—देवदत्तयज्ञदत्तं
देवदत्तश्च यज्ञदत्तश्चेति ॥

आह,—द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते, न [illegible] तयोरौद्दे-
शिकमिव पृथक्त्वमिति । यथा गाः, अश्वान्, पुरुषान्, पशूनिति
प्रत्येकमुद्दिश्यमानानाम् । इह तु विग्रहेण च शब्दागमात्
पृथक्त्वमुपजायते । नानाग्रहणं द्वयोर्बहूनामर्थानां विग्रहः स एव
पृथक्त्वाद्धेतोः पृथक्त्वेन निमित्तेनोपलक्ष्यमाणः, यस्मात् द्वावर्थौ
बहून् वा गृहीत्वैकस्मिन् कर्मणि उपसमावेष्टयति । तद्यथा
'देवदत्तयज्ञदत्तौ पचेते'—इत्येवम् । तस्मात् 'कर्मोपसंग्रहः'
इत्येतन्नामैव तद्भवति । अथवा बृहस्पतिश्चेत्युक्ते प्रजापतिरनुक्तो
द्वितीयो गम्यते प्रजापतिश्चेति ॥

कतमः पुनरसाविति ? उच्यते,—"चेति" कदाचिदयं
'समुच्चयार्थः' 'उभाभ्याम्' अभ्यर्थाभ्यां विगृहीताभ्यामेव संयु-
'प्रयुज्यते' । तथाच,—"अहं च त्वं च वृत्रहन्त्सं युज्याव सनि-
भ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्र-
रातयः ॥" (ऋ० सं० ६, ४, ४२, ५) । घोरपुत्रः प्रगाथोऽन-
येन्द्रया पङ्क्त्या इन्द्रस्य सख्यार्थी समप्रार्थयत् । हे 'वृत्रहन्' इन्द्र
'अहं च' प्रगाथ 'त्वं च' 'संयुज्याव' । एकस्मिन्नर्थे सति प्रति-

लक्षणे युज्यावहै 'आ सनिभ्यः' आप्राप्तेः। 'अरातीवा'—इत्येकं पदम् अर्थेचमावां संयुक्तौ दृष्ट्वा हे 'अद्रिवः'। 'अरातीवा चित्' अदानशीलोऽपि दानशीलतामुपेत्यानुमंस्यत एवावयोर्दानम्। 'भद्रा' भन्दनीया 'इन्द्रस्य' 'रातयः' दानानीत्येवं मन्यमानः। को हि नाम द्यन्संयुक्तानामस्माकं न दद्यादित्यभिप्रायः॥

अथाप्याकारः "एतस्मिन्नेवार्थे" समुच्चयार्थे। "देवेभ्यश्च पितृभ्य आ"—इति। अयमस्मिन्मन्त्रे आकारः। "यो अग्निः कव्यवाहनः पितॄन् यक्षदृतावृधः। प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ॥" (ऋ० सं० ७, ६, २२, १)। अनुष्टुप्, आर्षी, पितृयज्ञे विनियुक्ता। 'योऽग्निः' कव्यस्य वोढा, यस्यायमधिकारः, कव्यानि वोढव्यानीति, स इहास्माकं पितृयज्ञे होतृत्वेन स्थितः 'पितॄन्' 'यक्षत्' पूजयत्वित्यर्थः। किंलक्षणान् 'ऋतावृधः' सत्यवृधो वा यज्ञवृधो वा। किञ्च। 'प्रेदु हव्यानि' वोचति, वोचतु च। प्रब्रवीत्वेतानि हवींष्यस्मत्प्रदत्तानि। कस्मै? 'देवेभ्यश्च पितृभ्यश्च'—इति॥

"वेति" अयं "विचारणार्थे"। समुच्चयार्थीयप्रसङ्गेनोदाह्रियते। "हन्ताहं पृथिवीमिमां निदधानीह वेह वा। कुवित्सोमस्यापामिति॥" (ऋ० सं० ८,६, २७, ३)। ऐन्द्री लवस्तस्यैवमार्षं, गायत्री। 'हन्त' इदानीमेव 'अहम्' 'इमां पृथिवीम्' 'इह वा' अन्तरिक्षलोके, 'इह वा' द्युलोके। अथवा 'इह' दक्षिणे स्कन्धे, 'इह वा' सव्ये 'निदधानि' अवस्थापयामि। अतः स्थानादुद्धृत्य। अथ किमर्थं ब्रूते? 'कुवित्सोमस्य' बहुहं

सोमम् 'अपाम्' पीतवानिति। अस्य मे सोमपानस्यानुरूपमेउ धीर्य्यमस्तीत्यभिप्रायः॥

"अथापि" "वेति" अयं "समुच्चयार्थं भवति"। "वायुर्वा त्वा मनुर्वा त्वेति"। "वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः। ते अग्ने अश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः (य० सं० ९, ७)"। अनुष्टुवेषा। वाजपेयेऽश्वयोजने विनियुक्ता। हे अश्व! वायुश्च त्वा मनुश्च त्वा, गन्धर्वा एते सप्तविंशतिर्युञ्जन्त्वामस्मिन् रथे। ते हि विदुर्यथा त्वं योक्तव्यः। एवञ्च पूर्व्वमप्यश्वं युक्तवन्तो देवानामृषीणां च। त एव च तस्मिन् जवमादधुः आहितवन्तो यस्मात्तो ऋषीनपि ममापि चाग्ने! तस्मात् त एव युञ्जन्तु, जवं चास्मिन्नादधत्विति॥३॥

अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते अयमहेदं करोत्वयमिदमिदं ह करिष्यतीदं न करिष्यतीत्यथाप्युकार एतस्मिन्नेवार्थ उत्तरेण मृषेमे वदन्ति मन्यमुते वदन्तीत्यथापि पदपूरण इदमु तदु हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे कथं हि करिष्यतीत्यनुपृष्टे कथं हि व्याकरिष्यतीत्यसूयायां किलेति विद्याप्रकर्ष एवं किलेत्यथापि न ननु इत्येताभ्यां सम्प्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवमेति प्रतिषेधे मा कार्षीर्मा

हार्यीरिति च खल्विति च खलु कृत्वा खलु कृतमथापि पदपूरण एवं खलु तद्बभूवेति शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्चागस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे ॥ ४ ॥

इति प्रथमाध्यायस्य द्वितीयः पादः ॥ १, २ ॥

"अह इति च, ह इति च" इत्येतौ "विनिग्रहार्थीयौ"। तयोः पुनरेतयोरेतत् प्रयोगस्थानमाद्यम्। द्वयोरर्थयोरेककाले प्रवृत्तयोः "पूर्वेण" पूर्ववाक्यगतेनार्थेन संयुक्तौ "प्रयुज्येते"। तद्यथा,—"अयमहेदं करोत्वयमिदम्"। अयमह यज्ञदत्तो गाः पाययतु, अयं देवदत्तो मुद्गकामिति॥

हकारस्योदाहरणम् "इदं ह करिष्यतीति"। यज्ञदत्त इदं ह करिष्यति। "इदं न करिष्यतीति"। ओदनं न पक्ष्यतीति॥

"अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण"। विनिग्रहार्थे भवति। स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तः प्रयुज्यते। तद्यथा,—"मृषेमे" वृषलाः "वदन्ति"। "सत्यमु ते" ब्राह्मणाः "वदन्तीति"। विनिग्रहो नाम, विभागेनावस्थितयोर्यज्ञदत्तदेवदत्तयोरेकस्मिन् यज्ञदत्तेऽभिमतस्योपादानस्य नियमेन ग्रहणं यत् स विनिग्रहः। तदर्थौ विनिग्रहार्थौ, विनिग्रहार्थ एव विनिग्रहार्थीयः॥

"अथापि" उकारः "पदपूरणः" भवति। "इदु मु त्य पुरुतम पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात्। नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय॥" (ऋ० सं० ८, २, १)। वामदेवो गौतमोऽनया त्रिष्टुभोषसं तुष्टाव प्रातरनुवाकाश्विनयोः शस्यते। 'इदं' तत् 'ज्योतिः' यत् ज्ञ कथयन्ति। उकारः पदपूरणः। एतत् 'पुरुतमं' बहुतमम् कुतः? पुरुतमम्। 'तमसः' यदभिभूय शार्वरं तमः समात्मानमभिव्यनक्ति। अत एव तद् बहुतमम्। 'पुरस्तात्' प्राच्यां दिशि ज्योतिः 'वयुनवत्' प्रज्ञानवदुत्तिष्ठति। 'नूनं' निश्चयेन एताः 'उषसः' दिवो दुहितरः। रूपसामान्यात् दुहितृत्वात्। 'विभातीः' विभासमानाः 'गातुं' गमनमपि इतार्थं जनानां 'कृणवत्' कुर्वन्त्य आगच्छन्ति। यथेयमनुरज्यते प्राची दिक्, विध्वंस्यते च तमः। एकस्या एव पूजनार्थं बहुवचनम्॥

"तदु प्रयक्षतम मस्य कर्म दस्मस्य चारुतम मस्ति दंसः। उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्य१ श्चतस्रः।" (ऋ० सं० १, ५, २, १)। द्वितीयमुदाहरणमस्यैव। गौतमो नोधाअनया त्रिष्टुभेन्द्रमस्तौत्। प्रवर्ग्ये विनियुक्ता। 'तत्' प्रकर्षेण 'यक्षतमं' पूज्यतमम्। उ इति पदपूरण एव। 'अस्य' इन्द्रस्य 'दस्मस्य' दासयितुर्दर्शनीयस्य वा 'चारुतमं' शोभनतममन्यदपि तस्य 'अस्ति' 'दंसः' कर्म किमपि बहुप्रकारम्। तत् चावैव पूज्यमेव। इदमेव तस्य चारुतमं च पूज्यतमञ्च। तत् किम्? उपह्वरे यत् उपराः अपिन्वन्'। उपह्वानमर्हन्ति यस्मिन् देशेऽव-

स्थिताः सहायाः, स उपह्वरो देशः, जनैरनाकीर्णो यस्मिन्नेकाकी 'यत्' 'उपराः' मेघपूरिताः 'मध्वर्णसः' मधूदकाः 'चतस्रः' 'नद्यः' नदीः 'अपिन्वत' अपातयत् अक्षारयत्। वर्षद्वारेण यज्ञादि प्रावर्त्तयत्, —इत्यतः। एतदेवास्य श्रेष्ठतमत्वम् पूज्यतमत्वञ्चेत्यभिप्रायः॥

"हीत्येषोऽनेककर्मा"। तद्यथा,—"इदं हि करिष्यतीति हेत्वपदेशे। कथं हि करिष्यतीत्यनुपृष्टे। कथं हि व्याकरिष्यतीत्यसूयायाम्"। कथमयं व्याकरिष्यतीत्यकृतप्रयत्नोऽयमित्यभिप्रायः। अमर्षादसाक्षाच्छब्दपूर्वकोऽभिप्रायः परिवादोऽसूयेत्युच्यते। परगुणानभिज्ञेत्यर्थः॥

"किलेति विद्याप्रकर्षे" विज्ञानातिशय इत्यर्थः॥ अन्यत उपश्रुत्यातिशय इत्यर्थः। अन्यत उपश्रुत्यातिशयेनावधार्यान्यस्मा आचष्टे कश्चित्—"एवं किल" एतदासीद् वृद्धमिति॥

"अथापि न ननु इत्येताभ्यां" संयुक्तः किलेत्ययं प्रयुज्यते। "अनुपृष्टे" अर्थे। अन्यत उपश्रुत्य कश्चिदयं नायमेवमिति सत्त्वमेवार्थमन्यमनुपृच्छति। अथैतयमर्थद्वयपूर्वस्य। "न किलैवम्"—इति। "ननु किलैवम्"—इति॥

"मेति" अयं "प्रतिषेधे"। तद्यथा,—"मा कार्षीर्मा हार्षीरिति च"। अयञ्च प्रतिषेधार्थीय एव।

"खल्विति च"। तद्यथा,—"खलु कृत्वा"। अकृत्वेत्यर्थः। देशभाषाव्यवस्थयैवञ्जातीयानामुपेक्षितव्यः क्वचित् प्रयोगः॥

"अथापि" खल्वित्ययं "पदपूरणे" भवति। तद्यथा,—एवं खलु तद्बभूवेति। अन्वीक्ष्यः प्रयोगः क्वचित्पादवृत्तेषु॥

"शश्वदिति विचिकित्सार्थीयो भाषायाम्"। छन्द पुनरन्येष्वप्यर्थेषु भवति। यथासम्भवं द्रष्टव्यः। इयं चा शैली अर्थमपेक्ष्य। एवं शब्दस्य पुरस्तात् प्रयोगो वा भवति उपरिष्टाद्वा। तद्यथा,—"शश्वदेवमित्यनुपृष्ट एवं शश्वदित्य स्वयं पृष्टे" अर्थ इति वाक्यशेषः॥

"नूनमिति विचिकित्सार्थीयो भाषायाम्"। विचिकित्सा नाम विवेकपूर्वकोऽवधारणाभिप्रायः। तदयं भाषायां भवति। "उभयम् अन्वध्यायम्"। पुनरयमर्थद्वये भवति—"विचिकित्सार्थीयश्च पदपूरणश्च"॥

उदाहरणमत्र निर्विवक्षुर्निदानमेवाह,—"अगस्त्य इन्द्राय" —इत्यादि। निदानयतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम्, तेन ह्यतिगमर्थमुच्यमानः प्रकाशते। ततः पदानि। ततोऽर्थः। ततः प्रत्येकं विग्रहेण निर्वचनम्। एष हि व्याख्याक्रमः। अगः कुम्भः, तत्र स्त्यानः संहतः इत्यगस्त्यः। सः "इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रदित्सां चकार"। सम्प्रदानुमैच्छदित्यर्थः। "स इन्द्र एत्य परिदेवयाञ्चक्रे"। परिदेवना नाम मन्युपूर्वको विलापः॥ ४॥

इति निरुक्तपूर्वार्धे षष्ठाध्यायस्य द्वितीयः पादः॥ ६, २॥

---

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम्। अन्यस्य चित्तमभि सञ्चरेण्यमुताधीतं विनश्यति॥ न नूनमस्त्य-तनं नो एव श्वस्तनमद्यास्मिन् यवि द्युरित्यह्नो नामधेयं गेतत इति सतः श्व उपाशंसनीयः कालो ह्यो हीनः लः कस्तद्वेद यदद्भुतम् कस्तद्वेद यदभूतमिदमपीतर-द्भुतमभूतमिवान्यस्य चित्तमभिसञ्चरेण्यमभिमञ्चार्यन्यो नियधित्तं चेततैरुताधोतं विनश्यतीत्याख्यातमभिप्रेतम पिपदपूरणः॥ १॥

"न नूनमस्ति (ऋ० सं० २, ४, १०, १)"—इति। विचार्य्य-मनैतस्याचल्,—अद्यतनं हविर्मम नास्तीति। सकारं दृष्ट्वा-नशब्दोऽध्याहृतः आचार्य्येण। प्रतिषेधे हि सति प्रतिषेध्ये-पदं भवितव्यमिति। एते च मन्त्रैकदेशा एव सन्तोऽध्या-ः, पदातिरेकादध्ययनकालेनाधीयन्ते। ते त्वर्थनिर्वचनकाले यितव्याः। अथापि स्यात् श्वस्तनं भविष्यतीति। 'नो श्वः' तावदस्मदर्थमेव निरुक्तं सदसम्भोऽपि नूनमथ श्वस्तने का शा। किङ्कारणं? 'कस्तद्वेद यदद्भुतम्'। को हि नाम द जानाति यदद्भुतमनुत्पाद्य कस्य भविष्यतीति मम वा स्य वा इति। कस्मात् पुनर्न विज्ञायत इति? अतः, यस्मात्

'अन्यस्य वित्तमभि सञ्चरेण्यम्' सञ्चरणशीलमनवस्थितमित्यभिप्रायः। 'उत' अपि, अथेति छन्दसि समानार्थाः। एतद्धनं हविः 'आधीतम्' आध्यातमभिप्रेतं सन् मया ममेदमित्येवं तथापि 'विनश्यति' एवान्यस्मै प्रदीयते। तत्रैवं सति श्वस्तनमस्माकं भविष्यतीति कुत एतदिति समस्तार्थः॥

अथैकपदनिरुक्तम्,—"अस्मिन् श्वः,—युरित्यह्नो नामधेयम्,। द्योतत इति सतः"। द्योतनेर्द्युरिति। द्योतत इति कर्तृकारकम्। सदिति यत्र ब्रूयात्, तत्रोच्चारित एव कारकनियमो द्रष्टव्यः, अन्यत्र यथेष्टं योज्यम्। "श्व उपाशंसनीयः" उपशंस्यः, सचेतसा आशास्तव्यो भवति, अनागतत्वात्। "ह्यो हीनः कालः" अतिक्रान्तो हि स भवति॥ श्वःसम्बन्धात् ह्यःशब्दोऽभिमानोऽपि निरुक्तः,—"अद्भुतम् अभूतम्"। "इदमपीतरदद्भुतम्"—शोणितवर्षादि, "अभूतमिव" कादाचित्कत्वात्। शब्दसारूप्यप्रसङ्गेनेदं निरुक्तम्। "अन्यो नानेयः" नानात्वेन व्यवस्थितस्यापत्यमसत्कुलजस्येत्यर्थः। अथवा न सतामानेयः। "वित्तश्चेतनेः" चेतयत्यनेनार्थानिति वित्तम्। "उताधीतं विनश्यतीत्याध्यातमभिप्रेतम्"—इति पर्यायवचनम्॥

"अथापि" अयमस्मिन्मन्त्रे "पदपूरणः" भवति—॥ १ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी। शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम

विदथे सुवीरा: ॥ सा ते प्रति दुग्धां वरं जरित्रे वरो वरयितव्यो भवति जरिता गरिता दक्षिणा मघोनी मघवती मघमिति धननामधेयं मंहतेर्दानकर्मणा दक्षिणा दक्षतेः समर्द्धयतिकर्मणो व्यृद्धं समर्द्धयतीत्यपि वा प्रदक्षिणागमनाद्दिशमभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो हस्तो हन्तेः प्राशुर्हनने देहि स्तोतृभ्यः कामान् मास्मानतिदंहीर्मास्मानतिहाय दा भगो नो अस्तु बृहद्वदेम स्वे वेदने भगो भजतेर्बृहदिति महतो नामधेयं परिवृन्बृह भवति वीरवन्तः कल्याणवीरा वा वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा सीमिति परिग्रहार्थीयो वा पदपूरणो वा प्र सीमादित्यो असृजत् प्रासृजदिति वा प्रासृजत् सर्वत इति वा विसीमतः सुरुचो वेन आवगिति च व्यवृणोत् सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरोचनादपि वा सीमेत्येतदनर्थमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विसीव्यति देशाविति त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तमर्द्धनामेत्येके ॥२॥

अन्तरेण चात्वालोत्करौ तमाग्नीध्रं चोत्सृज्यमाना गच्छन्तीति "दिव्" पुनर्दक्षिणा। "हस्तप्रकृतिः" प्राङ्मुखस्य प्रजापते-र्दक्षिणो हस्तो बभूव, सा दक्षिणा दिगभवत्। अथ "दक्षिणो हस्तः" कस्माद्दक्षिण इति? "दक्षतेः" उत्साहार्थस्य,—स ह्युत्साहवान् भवति कर्मसु, न तथा सव्यः। "दाशतेर्वा स्यात्" दानार्थस्य, तेनैव हि प्रायेण दीयते। अथ "हस्तः" कस्मात्? "हन्तेः"—तेन हि हन्यते। न, अन्येनापि केनचिदङ्गेन हन्यते। एवं यो हन्तव्यो भवति तस्य "हनने" अयमेव तु "प्राशुः" शीघ्रः इत्यर्थः। "बृहदिति महतो नामधेयम्, परिवृढं भवति"—इति। "वीरो वीरयत्यमित्रान्" नानाप्रकारं मारयतीत्यर्थः। "वेतेर्वा स्याद्गतिकर्मणः" गत्यर्थे वर्तमानस्य, गच्छत्येवासावभिमुखं शत्रून्। "वीरयतेर्वा" विक्रमार्थस्य, विक्रान्तो ह्यसौ भवति।

"सीमिति" अयं "परिग्रहार्थीयो वा पदपूरणो वा"। "प्र सीमादित्यो असृजत् (ऋ० सं० २, ३, १, ४)"। अस्यामेव तावदृचमुभयमपि प्रदर्शयति। ततः परिग्रहार्थीयत्वे द्वितीयमुदाहरणं वक्ष्यति। गृत्समदस्य तत्पुत्रस्य वा कूर्मस्येयमार्षम्, "प्र सीमा-दित्यो असृजद् विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति। न श्राम्यन्ति [illegible] वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन्।" त्रिष्टुप्, सौरी। सूर्यः पुनरस्यां वरुणनाम्ना स्तूयते। प्रासृज-त्सूर्यो रश्मीन्। सीमिति पदपूरणं एव, शुभोऽपीत्यविवक्षित-प्रयोजनम् पदपूरणपक्षे। अथ परिग्रहार्थीयं सर्वमेव परिगृह्णाति,—"असृजत् सर्वत इति वा"। 'विधर्ता' विधारयिता, रसानां,

रश्मीनां वा, स्वरश्मिजालान्तर्गतस्य वा, धर्त्ता सर्वस्य जगतः। 'ऋतम्' उदकमादाय, पृथिवीलोकादन्तरिक्षलोकाच्च। 'सिन्धवः' स्यन्दनाः सूर्यरश्मयः,—ते हि आदित्यमण्डलात् प्राञ्चो वर्त्तमानाः स्यन्दन्ते वर्षकाले, सूर्येण प्रसृष्टा उदकमादाय सार्वलौकिकं 'वरुणस्य' सूर्यस्य स्थानं मण्डलं 'यन्ति'। तदेवमा-निशमुत्सर्गादानलक्षणं स्वकर्म कुर्वाणः 'न श्राम्यन्ति'। 'न' श्रान्ता अपि सन्तो विरागादप्येतत् कर्म 'विमुञ्चन्ति' एते। किं पुनः पतन्तो न श्राम्यन्ति? किं शनकैः? न। 'वयो न' वय इव पक्षिण इव शीघ्रं 'पप्तुः' पतन्तः 'रघुया' लघुया लघ्व्या शीघ्रिकया गत्यापि 'परिज्मन्' परिजमन्तः परिगच्छन्तः सर्वमप्येतज्जगन्न श्राम्यन्ति न विमुञ्चन्त्येतत् कर्म॥ एतद्गुणयुक्तानामप्येतेषां सूर्य्य एव प्रतिसर्गे संयमे च ईश्वर इत्येवं सूर्यस्य स्तुतिरेषा॥

"विसीमतः सुरुचो वेन आवरिति च"। इदं द्वितीयमुदाहरणम्। ब्रह्मजज्ञानमिति। "ब्रह्म जज्ञानं प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥" (य० वा० सं० १३, ३)। सामवेदसंहितायामपि छ० आ० ४, १३, १। वामदेवपुत्रो नकुलोऽनया त्रिष्टुभा आदित्यं तुष्टाव। प्रवर्ग्यविनियुक्ता रुक्मोपधाने चाग्निचयने। 'ब्रह्म' आदित्याख्यं 'जज्ञानं' जायमानं 'प्रथमम्' अनुत्प-आदितः 'पुरस्तात्' प्राच्यां दिशि, तदुद्दृष्टोपलक्षितमेव प्राच्याः .। 'वि आवः' व्यवृणोत्, विवृतानकरोत्। 'सुरुचः'

स्तरोचनान् रश्मीन् 'सीमतः' सर्वतः। किञ्च, 'सः' 'वेनः' र्यो 'बुध्न्याः' बुध्नमन्तरिक्षं तदवयवभूतास्ता दिशः, 'उपमाः' निर्माण्यः, तासु ह्येतत्प्रतिष्ठितं सर्वमुपनिर्मीयते जगदित्ये-,—तस्मात्ता एवोपनिर्मात्र्य उच्यन्ते। 'विष्ठाः' विस्थाः,— ह्येतज्जगद्विभिन्नं तिष्ठतीति ता एव विष्ठाः। 'सतश्च' अभि-कस्य स्थूलस्य 'असतश्च' अनभिव्यक्तस्य सूक्ष्मस्य 'योनिं' 'विवः' वृणोतेरित्यर्थः। आदित्योदये ह्येतद्गुणयुक्ता दिशोऽभिव्य-न्त इत्यभिप्रायः। अथवा बुध्न्या अप आन्तरिक्षास्ता उपमा येवमादि सर्वं योज्यम्॥

"अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम्। ोन्नः सीमतः सीमातो मर्यादातः। सीमा मर्यादा विसी-ति देशाविति"। विगतसन्तानौ देशौ करोतीति॥

"त्य इति विनिग्रहार्थीयं सर्वनामानुदात्तम्" निपातश्चेनैतदपि न्दिहाते। वक्ष्यति हि "निपात इत्येके"—इति। अतः त्य इति यं निपातकाण्ड उदाहियते। संशय परिशोधनाय त्य इत्येत-देनिग्रहार्थीयमिति व्याख्यातम्। किमु तत् सर्वनामविप्रतिपन्नस्य-स्याम् स्वरमप्यवधारयन् अस्यानुदात्तमित्याह, कथं पुनर्विप्रतिप-स्वरमेतदिति? उच्यते,—प्रातिपदिकस्यान्त उदात्त इत्यौत्स-र्गिकं लक्षणम् (फि० सू० १, १)—अन्यत्र चापवादात्,— वरणविदोऽपि चास्यापवादं पठन्ति,—"त्यत्यनेमन्तमसिमेत्य-नुदात्तानि (फि० सू० ४, १)"—इति।

द्वितीयायामुतो त्वस्मै तन्वं विसस्र इति चतुर्थ्यामथापि प्रथमाबहुवचने ॥ २ ॥

"ऋचां त्वः ( ऋ० सं० ८, २, २४, ५ )"—इति । बृहस्पतेरार्षम् । ऋत्विक्कर्मणां विनियोगमनयर्चाऽऽचष्टे । "ऋचां त्वः पोषमिति" । य एते चत्वारो महर्त्विजः, एतेषां 'त्वः' एक इत्यर्थः । किमेकः करोति ? 'ऋचां' 'पोषं' पुष्टिं 'पुपुष्वान्' पुनः पुनः भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानमर्मस्थानकरणानुप्रदानवतीर्यथाकालमृचोऽधीयानः 'आस्ते'—स हि तासां पोषः । कतमः ? 'एकः' एतत्कर्म कुर्वन्नास्ते इति,—होता, एतत्तावदृगध्ययनकर्म तस्मिन् होतरि विनियुक्तम्, उक्तं च—"ऋचैव हौत्रं क्रियते"—इति ( ऐ० ब्रा० ५, ५, ८ ) । 'गायत्रं' त्वः ? गायत्रमेको 'गायति' 'शक्वरीषु' ऋक्षु । कतमः ? उद्गाता, तस्मिन्नप्येतत्सामगानकर्म विनियुक्तम्, उक्तञ्च—"साम्नोद्गीथम्"—इति ( ऐ० ब्रा० ५, ५, ८ ) । "ब्रह्मा त्वः" ब्रह्मा नाम एक ऋत्विक् 'जाते' प्रायश्चित्ते 'विद्यां वदति' । विद्याख्यहेतुत्वादात्मनो विद्यां विज्ञानं वदतीतरेभ्य ऋत्विग्भ्यः, इदमत्र कुरुतेति । तत्रापि हि तत् कर्म विनियुक्तम् । स पुनरेष सर्वविद्यः सर्वविज्ञानस्तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ सर्वमेव वेदितुमर्हति । न ह्यसर्ववित् तमधिकारं शक्नुयान्निर्वर्त्तयितुम् । उक्तञ्च —"अथ केन ब्रह्मत्वं क्रियत इति ? त्रय्या विद्यया"—इति

पक इति। मीयत इति मानं कर्म, तन्मानेत्युच्यते। 
काचिदितिकर्त्तव्यता यज्ञस्य, तां विमिमीतेऽध्वर्युः, नानाप्रका
करोतीत्यर्थः ॥

पूर्वखण्डे २११ पृ० ), "तत्प्रतिषेधः" अध्वरः अहिंस इत्यर्थः ॥

आह,—नन्वत्र हन्यन्ते पशवः, छिद्यन्ते वृक्षवनस्पतयः, तत् कथमहिंस्रः ? उच्यते,—अभ्युदय एव हि सः। एवं हि श्रूयते —"न वा उ एतस्मिन् म्रियसे ( य० वा० सं० २३, १६ )"—इति। तथाच—"कुशात्यमिच्छन्ति तृणानि राजन्"—इति। तस्मादभ्युदययोगादहिंस इत्युपपद्यते ॥

"निपातः" अथम् "इत्येके" मन्यन्ते ॥

एवमेकीयपक्षे निपातत्वमस्योक्त्वा अधुना चोदकपक्षे स्थित्वा परपक्षमाक्षिपन्नाह,—"तत् कथमनुदात्तप्रकृति नाम स्यात्"—इति। तदेतच्छब्दरूपमनुदात्तस्वभावं सत् कथं नाम स्यात् ? ननु भवतैवोक्तम्—उत्सर्गेणैवान्तोदात्तानि प्रातिपदिकानि—इति ( ५६ पृ० १८ पं० )। उच्यते,—सत्यमुक्तम्। ननु तत्रैवेदं प्रत्युक्तम्—अन्यत्र चापवादात्—इति (५६ पृ० १६ पं०)। स एषोऽपवादांशः—स्यत्त्वनेमसमसिमेत्यनुदात्तानीति (६० पृ० २० पं०)। उत्सर्गादपवादो बलीयान्। तस्माद्विप्रतिपन्नस्वरमपि एतन्नामैव। 'किञ्च' "दृष्टव्ययं तु भवति"। तु शब्दो हेत्वर्थः —हेतुसमुच्चयार्थो वा। अनुदात्तप्रकृतित्वेऽपि स तु 'दृष्टानुविधयश्छन्दसि'—इति दृष्टव्ययत्वान्नामेति तद्भवति। एवं हेत्वर्थः। अथवैवमन्यथाहेतुसमुच्चयार्थः, अपवादस्मरणात्—व्ययदर्शनाच्च अनुदात्तमपि सदेतन्नामैव भवति। निपाता अप्याद्युदात्ता भवन्ति ( फि० सू० ४, ११ )। तस्मात् स्वरापवादत्वाद्—दृष्टव्ययत्वाच्च नामैवैतदित्युपपन्नम् ॥

आह,—क्व पुनरस्य व्ययो दृष्टः ? उच्यते,—"उत त्वं स
स्थिरपीतमाहुरिति द्वितीयायाम्" एकवचने। एवम् 'उतो त्व
शृण्वं १ वि सस्र इति चतुर्थ्याम्" एकवचने व्ययो दृष्टः। उ
रिप्राच्छेपः। "अथापि प्रथमाबहुवचने"—व्ययो दृष्ट इत्यव
हारः ॥ ३ ॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वस
बभूवुः। आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्ना
उ त्वे ददृश्रे। अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टे
नक्तेरित्याग्रायणस्तस्मादेते व्यक्ततरे इव भवत इति
विज्ञायते कर्णः कृन्ततेर्निकृत्तद्वारो भवत्यृच्छतेरित्याग्राय
ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते मनसां प्रजवेष
समा बभूवुरास्यदघ्ना अपर उपकक्षदघ्ना अपरे आस्यमस्यते
रास्यन्दत एनदन्नमिति वा दघ्नं दघ्यतेः स्रवतिकर्मणो
दस्यतेर्वा स्याद्विदस्ततरं भवति ह्रदा इवैके प्रस्नेया
ह्रदा इवैके प्रस्नेदद्दृशिरे स्नानार्हा ह्रदो ह्रदतेः शब्दकर्मण
ह्लादतेर्वा स्याच्छीतीभावकर्मणोऽथापि समुच्चयार्थे भवति॥४

अक्षण्वन्तः कर्णवन्तः (ऋ० सं० ८, २, ३४, २)"—इत्ये
तस्यामृचि। बृहस्पतेरार्षं विद्यासूक्तं नाम। 'अक्षण्वन्तः' अक्षि

संयुक्ताः, एवमपि समानेन्द्रियाः समानपृष्ठोदरपाणिपादाः सन्तः अपि च, 'सखायः' समानख्यानाः सर्वे मनुष्याः। अथवा समानेषु शास्त्रेषु कृतश्रमाः। वैयाकरणा वैयाकरणानामेव समानख्यानाः, नैरुक्ता एव नैरुक्तानाम्। 'मनोजवेषु' मनोगम्येष्वर्थेषु 'असमा बभूवुः'। केचिदूहापोहनधारणवक्तृत्वसमर्थाः, केचिदमेधसः। कथमसामान्यमिति? यतो दृष्टान्तेन प्रतिपादयति।—"आदघ्नास उपकक्षास उ त्वे ह्रदा इव"। आदघ्ना एव आदघ्नासः। आस्यदघ्नहृदपरिमाणाः, केचित् प्रस्नेयाः। उपकक्षासः कक्षसन्निकृष्टदेशतुल्योदका इव ह्रदाः। एके प्रस्नेयाह्रदाः 'स्नात्वा' महोर्म्याः अपरिमेयप्रज्ञानाः। 'ददृश्रे' ददृशिरे—दृश्यन्त इति समस्तार्थः॥

अथैकपदं निरुक्तम्। "अक्षि, चष्टेः" पश्यत्यर्थस्य,—दृश्यते ह्यनेन। "अनक्तेः" व्यक्त्यर्थस्य—"इत्याग्रायणः" मन्यते। याहशमपि चैतस्मिन्निर्वचने भवति। "तस्मादेते व्यक्ततरे इव भवतः"—इति। यस्मादिदमामेति किमिति प्रकृतमपेक्ष्य। अथवा यस्मादेते [illegible]

छन्ततेर्निरुत्तद्वारो भवति, ऋच्छतेरित्याग्रायणः" मन्यते
ब्राह्मणमपि चैतस्मिन्निर्वचने भवति,—"अर्च्छन्तीव खे उद्गन्त
मिति ह विज्ञायते"—इति। अर्च्छन्तीवैतौ कर्णौ खेऽभिव्यक्त
सन्तः शब्दाः एतावपि च उद्गन्तां प्रत्युद्गच्छत इव ग्रहणाय।
विचार्य्यमाणे ज्ञायते खे कर्णाविति। "आस्यमस्यतेः" क्षेपार्थस्य,
—क्षिप्यते ह्येतदामिमुख्येनान्नम्। स्यन्दतेर्वा स्यादाङ्पूर्वस्य
स्रवणार्थस्य,—शुष्केऽपि ह्येतदद्य आगते स्रवत्येव श्लेष्मा
येन तदार्द्रीकृतं ग्रसितुं शक्यते। "दस्मं, दस्यतेः" स्रवत्यर्थस्य
सुततरमिव तद्भवत्युत्तरान् परिमाणात्। "दस्यतेर्वा स्यात्
क्षयार्थस्य। "विदस्ततरं" ह्यपक्षीणतरं, तद्ध "भवति" उत्तर
स्मात् परिमाणात्। "प्रस्नेयाः" प्रकर्षेण स्नातुं येषु योग्यम्।
अगाधत्वात्, ते प्रस्नेयाः स्नानार्हा इत्यर्थः। "ह्रदो ह्रादतेः"
शब्दार्थस्य,—शब्दं ह्यसावभिहन्यमानः करोति। "ह्रादतेर्वा
स्यात्" शीतीभावार्थस्य,—ग्रीष्मेऽपि ह्यसौ शीतल एव भवति॥

"अथापि" अयमपरो निपातः "समुच्चयार्थे भवति" एकतमः
—स्यन् इति ॥ ४ ॥

किमुदाहरणम् ?—

पर्य्याया इव त्वदाश्विनमाश्विनश्च पर्य्यायाश्चेत्यथ ये
प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पद-
पूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति। निष्ट्वक्त्रा-

श्रिदिन्नरो भूरितोका वृकादिव। विम्यस्यन्तो ववाशिरे
शिरञ्जीवनाय कम्। शिशिरञ्जीवनाय। शिशिरं
गातेः शम्नातेर्वा। एमेनं सृजता सुते। आसृजतैनं
रे। तमिद्वर्द्धन्तु नो गिरः। तं वर्द्धयन्तु नो गिरः।
तयो गिरो गृणातेः। अयमु ते समतसि। अयन्ते
तसीपोऽपि दृश्यते ॥ ५ ॥

"पर्य्याया इव त्वदाश्विनम् (ऋ० प्राति० १२, १०)"—इति।
, किमुक्तं भवति? उच्यते,—"आश्विनं च पर्य्यायाश्चेति"
र्थं समुच्चयार्थे भवति। "अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु
वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः
मेविति"। व्याख्याताः क अपि संग्रहार्थीयाः, तत्प्रसङ्गेन
प्रमादयो अन्यार्था अप्युक्ताः। प्रतिज्ञाप्रसक्तानेवाधुना
नान् वक्ष्यामः। तेषां सामान्यमेव तावल्लक्षणमुच्यते।
रकारार्थोऽयमथशब्दोऽत्र ये प्रवृत्ते परिसमाप्ते अर्थे अन्यैः
पगतैः पदैरमिताक्षरेषु गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति
नार्थास्ते पद मिताक्षरेषु भवन्ति। उभयथापि तु ते
ताः अनर्थान्तरवाचकाः, प्रकृतादर्थात् न किञ्चिदर्थान्तरं
न्ते। पदमेव वाक्यमेव वा पूरयितव्यमित्ययमेव हि
र्थे नान्यदर्थान्तरम्। उक्तं च,—
ंयावाचकमाख्यातमुपसर्गो विशेषयत्।

आह,—नन्वेवं खलु नूनमित्येतयोः पदपूरणत्वस्य बाधः प्राप्त इति ? उच्यते,—नैवम् । किं कारणम् ? उकारवत्तौ ह्यु भावपि । यथैव ह्यु कारोऽर्थवांश्चानर्थकश्च, एवं तावपि । तस्मादुकारग्रहणेनापि तावप्यत्र गृहीतौ द्रष्टव्यौ । न केवलमुभावेव, किन्तर्हि ? अन्येऽपि तादृशा एव सन्ति । तद्यथा,—"आ घा ता गच्छानुत्तरा"—इति अत्र घकारः । तेऽपि यथाप्रकरणं द्रष्टव्याः । उदाहरणमात्रप्रदर्शनार्थं ह्येतावन्त एवोदाहृताः । ■ एते सर्वे पदार्थासम्भवे सत्यनर्थका एव, सम्भवे त्वर्थवन्त इति । किं कारणम् ?—न हि कस्मिंश्चिदर्थे तावत् सम्भवति अनर्थस्य-कल्पना न्याय्या शब्दस्य,—अर्थप्रधानो हि शब्दः । ■ नाकस्माद्भिधेयेनार्थेन विना वाक्ये सहन्येत । तस्माद्यथावद्गम्यमेव तावदर्थः कल्पनीयः । यत् पुनरेतदुक्तम्—'वाक्यपूरणाः' इति (६६ पृ० १५ पं०) । अगतिरेषा । तदेतत् सर्वथाप्यर्थासम्भवे सति अगती सत्यां भवति । त एते प्रायोवृत्त्या इव नविन्यादयोऽर्थवन्तः । प्रायोवृत्त्या च कमीमिद्वोऽनर्थका इति द्रष्टव्यम् ॥

आह,—ननु आद्ये ■ मन्त्रे च पूरणानामागमो दृष्टः, तद्यथा —"नूनं सा ते"—इति, अथ कथमुच्यते,—'ये प्रवृत्तेऽर्थे आगच्छन्ति, ■ पदपूरणाः'—इति ? उच्यते,—न ह्येतदध्ययनकालीनमानुपूर्व्यमक्षराणां पदानां व्याख्याकाले नियतमस्ति, अर्थप्रकाशनार्थनिर्वचनवशेनान्यपदानुपूर्व्यमुपजायते समाख्याकाले । तत्रैवं सत्याख्यातपदम् प्रधानम्, तदनु नाम, तदनूपसर्गाः, तदनु

निष्क्रक्रा एव 'निष्क्रक्रासः' निर्वसना इत्यर्थः। अपि च। 'भूरितोकाः' बहुपत्या इत्यर्थः। के पुनस्ते? दरिद्राः, 'केचिन्नरो' मनुष्या इत्यर्थः। किं तेषामिति। 'वृकादिव बिभ्यस्यन्तः' पुनः पुनर्भृशं वा बिभ्यतो वृकादिव हिमात् 'यथाशिरे' पुनः पुनर्भृशं वा वश्यन्ते। किमिति यथाशिरे। शिशिरम्। अस्माकं जीवनाय जीवनार्थमागच्छति,—इत्येवं हेमन्ते यथाशिरे। अल्पतरशीतं हि शिशिरं, सुखं तत्र जीविष्याम इत्यभिप्रायः॥

निगमप्रसक्तस्य शिशिरशब्दस्य निर्वचनम्—"शिशिरं शृणातेः" हिंसार्थस्य "शम्नातेर्वा" हिंसार्थस्यैव, नार्थकृतो विशेषः। हिनस्ति तस्मिन् काले अप्रतिपध्यमानो अतिशयेन शायामिनः शुष्कानोषधिवनस्पतीन्॥

ईमित्यस्योदाहरणम्—"प्र मेन सृजता सुते मन्दि मिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये॥" (ऋ० सं० १, १, १७, २)। ऐन्द्र्येषा गायत्री। मधुच्छन्दस आर्षम्। पृष्ठ्याभिप्लवस्तोमवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे महाव्रते ■ तृचाशीतिषु विनियुक्ता। 'आ सृजतैनम्' आभिमुख्येन सृजत। 'ईम्'—इति पदपूरण एव। दशोक्थपात्रेष चमसेभ्य सोमं हे अध्वर्य्यवः! किमासृजत? योऽयमिन्द्रस्य 'सुते' अभिषुते सोमे स्वांशः, उक्थपात्रचमसस्थः, एतमासृजत। 'मन्दिं' मन्दयितारम्। 'मन्दिने' इन्द्राय हर्षयते। 'चक्रिं' चक्रवन्तं कमणवन्तं वा। अथ वा हविर्धानशकटचक्राभ्यां चक्रवन्तमपि। चक्रदिति कर्मनाम (पूर्वभागे १८४ पृ०)। अतिविशिष्टवीर्य्यजनकैः

संस्कारकर्मनिस्तप्तं 'विश्वानि' सर्वाणि भूतानि वा। 'मघवे' धनपते इन्द्राय। सोमः प्रत्यक्षः, दानाध्यक्ष, परोक्षा त्विन्द्रस्य स्तुतिः। "अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि"—इति वक्ष्यति॥

"समिद्वर्धन्तु नो गिरः"—इति। इत्यस्योदाहरणम् "समिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव। य इन्द्रस्य हृदंसनिः॥" (ऋ० सं० ७, १, २०, ५)। अमहीयोराङ्गिरसस्येयमार्षम्। गायत्री, सौमी। प्रायस्तुतौ विनियुक्ता। 'तम्' वर्द्धयन्तु 'नः'। तं सोमम्। 'इत्'—इति पदपूरणः। वर्द्धयन्तूपजातवीर्यं कुर्वन्तु। देवतृप्तये। नः एताः अस्मद् 'गिरः' स्तुतयः। कथं पुनर्वर्द्धयन्तु। 'वत्सं संशिश्वरीरिव'। वत्समिव, एकशिशुका बह्व्यो गावः, ता यथा पर्यायेण वत्समेवं स्तनयत्साः स्वैः स्वैः पयोभिर्वहनादिसमर्थं कुर्युः। एवमेवास्मद्गिरः एतं सोममुपजातवीर्यं देवतर्पणाय कुर्वन्तु वर्द्धयन्तु। कतमः। 'यः' 'इन्द्रस्य' 'हृदं सनिः' हृदयसम्भक्ता, तमेनं वर्द्धयन्त्वित्यभिप्रायः॥

आह,—कस्मात् पुनरत्र केचिदुदाहरणमन्त्रा अशेषाः पठ्यन्ते, निरुच्यन्ते, केषाञ्चिदेकदेशाः ? इति। उच्यते,—ये तावदशेषाः पठ्यन्ते, निरुच्यन्ते च, ते व्याख्याधर्मोपदेशनार्थम्। यदि पुनः सर्व एव पठ्येरन् निरुच्येरंश्च, अतिगुरुशास्त्रं सम्पद्येत। अथापि सर्वेषामप्युदाहरणमन्त्राणामेकदेशः पठ्येत निरुच्येत च, तथापि व्याख्याधर्मो न प्रदर्शितः स्यात्। तस्माद् व्याख्याधर्मोपदर्शनार्थं

पाः पठ्यन्ते, निगद्यन्ते च, केचाश्चिदेकदेशाः, शाखाति-
ात् ।—इति प्रतिमन्त्रमपि सकलार्द्धचपादाध्ययने शक्यते
न्वेष्टुम्, तदेतत्समासेन ब्रूमः। यस्मिन् यस्मिन्मन्त्रे
ऐकार्थमनेकार्थमनवगतसंस्कारं वा निर्ब्रवीति, किञ्चिद्वा-
इपमध्याहरति, अन्यद्वापोहति, अन्यथा वा कश्चिद्वि-
करोति, सन्दिग्धं वा निर्णयति, तदर्थमेव तं सकल-
यस्मिन्वार्द्धर्चे पादे तावत् पदं भवति, यदभिमतं निर्वक्तुं
मेवाधीते। तन्निर्विवक्षया तदेतदेवं निपुणमन्वेष्टव्यं

स्योदाहरणम्—"अय मु ते समतसि कपोत इव गर्भ-
वचस्तच्चिन्न ओहसे॥" (ऋ० सं० १, २, २८, ४)।
नियुक्तः आत्मानं मोचयितुमिच्छेन्नेतया गायत्र्येन्द्रं
'अयम्' इति वर्त्तमानः सन् कर्मणि निर्दिश्याह।
(म्यत्र्यं सोमः यं प्रति नित्यकालमेव 'समतसि' सम्प-
यं तातु क्रियास्वाहूयमानः समतसि सम्पतसि। कथं
समतसि? 'कपोत इव' कमतनः कपोतः, कुत्सित-
यथा 'गर्भधिं' गर्भधानीं कपोतिकाम्, अण्डाश्रयं वा
तः पुनः पतति, एवं यं प्रति नित्यकालमेव सम्पतसि
यायमभिमुखः सोमः, एभिर्हविर्भिः। अथ किम-
्यसि? मोचय अस्मान्। किंवा 'वचः' एवेदं नः
'नोहसे' न चितर्कयसि रोरूयमाणानाम्? केनाप्य-
ययमेतद् ब्रूमः,—कैर्वा युष्मद्गुणैर्न युक्तमेतदिति,

गतो न सोमपम्यमाननो गृहान्। अन्येतद्यथुस्यार्थमामंतान-स्माकमयथाप्यं कारुण्यान्मोचयास्मान्। किं नेऽस्माभिरयमेतेऽस्मत्: प्रति विशिष्टतरः सोमोऽभिषुत इत्यभिप्रायः॥

"इवोऽपि दृश्यते"। कदाचिदनर्थकः—इति यास्कवोरः ॥५

किमुदाहरणम्?—

सु विदुरिव सु विज्ञायेते इत्यथापि नेत्येष इदित्येतेन सं प्रयुज्यते परिभये। हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्। शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकम्पतामेति। नरकं न्यरकं नीचैर्गमनं नास्य क्रमणं स्थानमल्पमप्यस्तीति वाथापि न चेत्येष इदित्येतेन सम्प्रयुज्यतेऽनुपृष्टे न चेत् सुरां पिबन्तीति सुरा सुनोतेरेवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ६ ॥

इति प्रथमाध्यायस्य तृतीयः पादः ॥ २, ३ ॥

"सु विदुरिव, सु विज्ञायेते इव"—इत्येते उदाहरणे। सुष्ठु विदुर्यज्ञ ब्राह्मण इति, इवोऽनर्थक एव वाक्यपूरणः। सुष्ठु विज्ञायेते यज्ञो नक्षत्रं ब्राह्मणैरिति, अत्रापीवोऽनर्थक एव॥

व्याख्याताः पदपूरणाः, निपातसमाहारमधुना दर्शयति, तदधिकारार्थोऽयम् "अथ" शब्दः। इति सम्भावने। अथायमेव इदिति केवलः प्रयुज्यमानः पदपूरणो भवति। अपिचायमेव "न-इत्येतेन" "सं" युक्तः, "प्रयुज्यते परिभये" अर्थे। सर्वतो

यं परिभयम्। कथं प्रयोगः? "नैजिम्हायन्त्यो नरकं ...तामेति।" मृग्यःशेषः॥

केचित्त्वेतं कृतशेषमत्राधीयन्ते,—"हविर्भिरेके स्वरितः सचन्ते ...न्वन्त एके सवनेषु सोमान्। शचीर्मदन्त उत दक्षिणाभिर्नैजि... ...ायन्त्यो नरकं पताम" इति॥

नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तृन् प्रति समनेन ...न्त्रेण प्रत्यूचुः। 'एके' तावत् 'इतः' लोकात् 'हविर्भिः' पुरोडा... ...ादिभिर्निमित्तभूतैः 'स्वः' 'सचन्ते' स्वर्गं लोकं प्राप्नुवन्ति स्म। ...थ 'एके' 'सवनेषु' यज्ञेषु सोमान् सुन्वन्तः अभिषुण्वन्तः, तेन ...र्मणेत्यर्थः। 'शचीर्मदन्तः, अन्ये शच्या वाचा स्तुतिभिरेके देवान् ...ादयन्तः सन्तर्पयन्त इत्यर्थः। अप्यन्ये 'दक्षिणाभिः' स्वः सचन्ते ...स्येतदेवानुवर्तते। तत्रैवं सति, तेन तेनाभ्युदयेषु प्राणिषु श्रेयः ...ति यदि वयमेतानपि भर्तृन् सम्यक् परिचरेम। अन्येषां जप... ...ोमादीनां कर्मणामसम्भवे सति। "न इत्" वयमेतेषामप्युप... 'जिह्मायन्त्यो" जिह्ममाचरन्त्यो भगवन् "नरकं पताम",—न ...न्त्यो भर्तृपरिचर्यातः स्त्रियाः कश्चनधर्मोऽस्तीत्यभिप्रायः॥

नरकशब्दं निर्ब्रवीति,—नीचैरस्मिन्नर्यते गम्यत इति नरकम्। ...यथा नास्त्यस्मिन् रमणं रतिकरं स्थानमल्पमप्यस्तीति नरकम्। अथाप्ययमपरो निपातसमाहारो नचेत्येष इदित्येतेनैव सम्प्रयुक्तः प्रयुज्यते। केनचिदनुपृष्टे सति प्रतिवचनं भवति। तद् यथा कश्चित् कञ्चिन् पृच्छति,—'तिष्ठन्ति' वृषलाः? इति। ततः प्रत्याचष्टे,—'तिष्ठन्ति' इति। ततो 'यदि तिष्ठन्ति, किमर्थं

मागच्छन्ति ?" इति पुनरनुपृष्टे ब्रवीति,—'न सेत् सुगं नि-
र्गमिष्यन्ति' इति, यदि सुगं न निर्गन्तव्यम् ॥

अथ "सुग" कस्मात् ? "सुगोते."—सा शक्तिर्युक्तं बन्धै-
र्बन्धैः निरादिभिः ।

"एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः" । एवमेव
प्रकारेण उच्चावचेष्वर्थेषु बहुप्रकारेषु समासतास्त्वेभ्योऽर्थेषु च
प्रकारा निपतन्ति । प्रयुज्यमानानामेवं लक्षणशास्त्रप्रसिद्धार्थनिरीक्ष
णाच्चप्रयुक्तस्य अनुप्रयोगस्य, ईक्षितव्याः,—कः कस्मिन्
पतति ? इत्येवं द्रष्टव्याः परीक्ष्या इत्यर्थः ॥ ६ ॥

इति निरुक्तवृत्तौ प्रथमाध्यायस्य तृतीयः पादः ॥ १, ३ ॥

---

## चतुर्थः पादः ॥

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते
चोपसर्गनिपाताश्च तत्र नामान्याख्यातजानीति शाकटायनो
नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके
तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां
संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत्
सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्याद्

सर्वं तत् सत्त्वं तथाऽऽचक्षीरन् यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्यात् यत् किञ्चित् तुन्द्यात् तृणं तदथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ १ ॥

"इति"—करणोऽधिकारपरिसमाप्त्यर्थः। "इमानि चत्वारि पदजातान्यनुक्रान्तानि, नामाख्याते चोपसर्गनिपाताश्च" इति। तेषामयमासौ निगम इत्यर्थः। इतीमानि, चत्वारि पदजातानि व्याख्याय अनुक्रान्तानि,—पूर्वमाख्यातम्, ततो नामानि, ततः उपसर्गाः, ततो निपाता इत्येवमानुपूर्व्येण क्रान्तानि वर्णितानि। व्याख्ययेति वाक्यशेषः। कतमानि पुनस्तानि? नामाख्याते चोपसर्गनिपाताश्च—इति। तदपि व्याख्यातमेव॥ यच्च तदुक्तं,—'यत्तु किञ्चिदवशिष्यते, तच्चतुर्थेन पादेन वर्णयिष्यामः'—इति (१ अ० १ पा० ४ ख०), तदिदमेवायसरप्राप्तं पदचतुष्टयलक्षणानन्तरमारभ्यते,—"तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च"। तत्र तस्मिन्नेव पादचतुष्टये यानि नामानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं शाकटायन आचार्यो मन्यते इति वाक्यशेषः। नैरुक्तानां चैव समयः सिद्धान्तः सर्वेषामविशेषेण गार्ग्यवर्ज्यम्॥

आह—कः पुनरन्यथा ब्रवीति, येनैवमुच्यते,—शाकटायनो मन्यते इति? उच्यते,—"न सर्वाणीति गार्ग्यः" ब्रवीति। किं

गार्ग्यं एव प्रतीति ? नैरुक्तसमये,- "वैयाकरणानां चैके"—
व्याकरणमधीयते ये, ते वैयाकरणाः, तेषां चैके न सर्वाण्याख्यात-
जानि नामानीत्येवं प्रत्यपन् इति वाक्यशेषः ॥

"तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां
संविज्ञातानि तानि"—इति। तदेतत् प्रसङ्गगतं गार्ग्यमतेन
धात्वाख्यातजानि नामानि, यानि यायन्ति, एवं सम्प्रत्युक्त-
च्छन्दः। इह त्रिधा व्यवस्था ग्राह्यम्। तद्यथा,—प्रत्यक्ष-
क्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि। तत्र, प्रत्यक्ष-
क्रियाणि,—कारको हारक इति। प्रकल्प्यक्रियाणि, तद्यथा,—
गौरश्व इति। अविद्यमानक्रियाणि, तद्यथा,—डित्थो डवित्थः
अरविन्दोऽर्धाङ्ग चन्द्र इति। तदेवं सति यत्र येष्वित्यर्थः।
केषु नामसु स्वरसंस्कारौ, स्वरश्चोदात्तादिः, संस्कारश्च प्रकृति-
प्रत्ययादिः, तौ स्वरसंस्कारौ। समर्थौ, समर्थता नामोपपत्ति-
रुच्यते, सङ्गतार्थौ, लक्षणशास्त्रविहितयोपपत्त्या युक्तावित्यर्थः
यथैव लक्षणाविप्रतिपत्त्या स्वरोऽवस्थितः, एवं संस्कारोऽपि
येष्वपि च प्रादेशिकेन, प्रदिश्यते द्रव्यमनयेति प्रदेशः क्रिया,
तस्मिन् द्रव्ये अवस्थिता यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभि-
प्रेतः, तस्याः प्रदेशाख्यायाः क्रियायाः अभिधायको धातुः स गुण
इत्युच्यते। अन्यत्र हि गुणशब्दो प्रधाने वर्त्तते। दोषः, भङ्ग, गुण
इति समानार्थाः। प्रधानन्तु तत्र क्रियाप्रदेशाख्या, तदभिधायको
धातुः गुणाख्यः, स प्रदेशवाचकत्वात् प्रादेशिको गुण इत्युच्यते।
तेन धातुरूपेणान्वितावनुगतौ स्वरसंस्कारौ स्यातां सवेताम्।

येषामाह, किन्तेषामिति ? उच्यते,—संविज्ञातानि तानि। समं विज्ञातानि ऐकमत्येन विज्ञातानीत्यर्थः। तेषु तावदविप्रतिपत्तिरेवास्माकमाख्यातजानि नामानीति। तद्यथा,—कर्त्ता, कारकः, पक्ता, पावक इति। न पुनर्यथा गौरश्वः पुरुषो हस्तीति। किङ्कारणम्? एतेषु प्रकल्पन्ते क्रियाः, न साक्षादुपलभ्यन्ते। अपि चैतेषु कल्पयितुमपि तावच्छक्यन्ते। तदित्थादिषु पुनः कल्पयितुमपि शक्यन्ते। तस्मान्न सर्वाण्याख्यातजानि नामानीति। तत्र यदुक्तं 'सर्वाण्याख्यातजानि नामानि' इति तदयुक्तम्। रूढिशब्दे च क्रियाः केवलं शब्दव्युत्पत्तिकर्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते, न वस्तुतोऽर्थक्रियास्वनुसद्भावभावं प्रति। तत्र शब्दस्य प्रच्युतानुपलक्षितेऽनुप्रवृत्ते ऽभिधाने निवृत्तायां क्रियायामुपरतसाधनव्यापारं निरूप्य क्रियायामभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते॥

अपरो व्याख्यायमाह। "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्"। यत्र यस्मिन्नाम्नि स्वरसंस्कारौ, समर्थौ अन्वाख्यायीलक्षणोपपत्त्या युक्तौ, प्रादेशाभिधायिना च धात्वाख्येन प्रादेशिकेन गुणेनान्वितौ अनुगतौ, स्यातां न्यायवत्कार्मनामिकसंयुक्तेन संस्कारेण। तद्यथा,—कर्त्ता, कारकः, पक्ता, पावक इत्येवमादि। तदाख्यातजं गुणकृतमिति प्रतीम इति वाक्यशेषः। येषु पुनरन्वाख्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावननुगतौ, न च न्याय्यकार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरूपेण। किं तेषामिति? उच्यते,—"संविज्ञा-

नानि तानि" । संविज्ञानपदमितीह शास्त्रे रूढिशब्दस्येयं संज्ञा। वक्ष्यति हि, अग्निरिन्द्र इत्येवमादीनां संविज्ञानपदत्वम्—"यतु संविज्ञानभूतं स्यात्" इति। तथा वृत्रहा पुरन्दर इत्येवमादीनां गुणपदत्वम्। एवमिहापि विभागो द्रष्टव्यः। तत्र गुणपदानि कारकपाचकादीनि। संविज्ञानपदानि तानि "यथा,—गौर पुरुषो हस्ती" इत्येवमादीनि,—न ह्येषां गवादीनाम् अष्टाध्या व्युत्पत्तिलक्षणमस्ति, तस्माद्रूढिशब्दा एवैत इति ॥

अन्ये तु प्रदेशो व्याकरणमिति व्याचक्षते। तत्र हि शब्द लक्षणानि प्रदिश्यन्ते। तत् कुतः? कचिल्लक्षणानुग्रहः लक्षण यवयो वा गुण इत्युच्यते,—प्रसिद्धो हि गुणशब्दोऽनुग्रहेऽवय च। तद्यथा,—'गुणे ममायं वर्तते' इत्युक्तेऽनुग्रहे वर्तते इ गम्यते, अवयवेऽपि,—'द्विगुणा रज्जुः', 'त्रिगुणा' इति चोक्ते द्व्यवयवा त्र्यवयवेति गम्यते। शेषं समानमेव पूर्वाभ्या मर्थाभ्याम् ॥

अथवा संविज्ञानानि तानि, संविज्ञातानि तानि चेत्युभावपि पाठौ। तस्मादुभयथाऽपि व्याख्यातम्,—सत्त्वं प्रदेश इति। केचिद्गुणभूता क्रिया गुण इति व्याचक्षते ॥

किं चान्यत्? "अथ चेत् सर्वाण्याख्यातजानि नामानि स्युः"। तथाप्ययमपरो दोषः प्रसज्येत। आह, कतम इति "यः कश्च तत् कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्, यः ... अश्वः स वचनीयः स्यात्, यत् किञ्चि तृणं तत्"—इति। यः कश्चाविशेषेण प्राणी तत् कर्म

कुर्यात्, यत् किञ्चिदनेकप्राण्याश्रयमेकवदभिप्रेत्योच्यते,—तत्कर्म कुर्यादिति ? सर्वमेव तं प्राणिनं तेनैवैकेन नाम्ना आचक्षीरन्। तद्यथा। यः कश्चाध्वानमविशेषेणानश्वोऽप्यश्नुवीत, अश्व इत्येवं स वचनीयः स्यात्। कस्माद्धाश्वः अश्नुवन्नश्व इत्युच्यते, अन्योऽश्नुवन्नपि नोच्यते ? इति विशेषहेतुर्नास्तीति। तस्मादश्वोऽपि नैवमानक्रियायोगाभिप्रायेणाश्व इत्युच्यते, किन्तर्हि ? शब्दव्यवहार एवायमर्थप्रत्यायनार्थः ईदृशः क्रियानिरपेक्षः। एवमेव, यत् किञ्चित् तृन्द्यादविशेषेण तत्सर्वं तर्दनक्रियायोगात् तृणमित्येवमुच्यते। तस्माच्च सर्वाण्याख्यातजानि नामानीति॥

किञ्चान्यत् ? "अथापि चेत्" अथापि यदि "सर्वाण्याख्यातजानि नामानि स्युः"। तथाप्ययमपरो दोषः स्यात्। आह, कतमः ? उच्यते,—"यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवम्"। तद्यथा,—स्थूणा दरशया वा सञ्जनी च स्यात्", क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुज्येत, तावद्भ्यो भावेभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यात्। किं कारणम् ? न हि तत्र कासाञ्चिद्व्यावर्त्तको विशेषहेतुरस्ति, अन्यासां वा नियामकः। तत्रैवं सति स्थूणा एकैव सति दरे शेते इति दरशया इत्युच्येत, न चोच्यते। तथा च सज्यतेऽस्यां वंश इति सञ्जनीत्युच्येत न चोच्येत। एवमनेकानि सत्त्वानि एकक्रियायोगादेकनामानि स्युः, एकं चानेकक्रियायोगादनेकनाम, उभय-

थापि च व्यवहाराप्रसिद्धिः । तस्मान्न सर्वाण्याख्यातजानि नामानि स्युः ॥ १ ॥

अथापि य एषां न्यायवान् कार्मनामिकः संस्का यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन् पुरुषं पुरि शय इत्याचक्षीरन्नष्टेत्यश्वमन्तर्दनमिति तृणमथापि निष्पन्ने ऽभिव्याहारेऽभिविचारयन्ति प्रथनात् पृथिवीत्याहुः एनामप्रथयिष्यन् किमाधारश्चेत्यथानन्विते ऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायन एतेः कारितञ्च यकारादिञ्चान्तकरणमस्तेः शुद्धञ्च सकारादिञ्चाथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते ॥ २ ॥

आह,—किमिति ? उच्यते,—"य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्" । एषां पुरुषाश्वादिनाम्नां न्यायवान् लक्षणन्यायेन युक्तः ।

आह,—कः पुनरसाविति ? उच्यते,—कार्मनामिकः संस्कारः । कर्मकृतं नाम तत् पुनः पाचकलावकादि, तस्मिन् भवः कार्मनामिकः संस्कारः । किञ्च । यथाचापि प्रतीतार्थानि प्रतीतक्रियाणि स्युः तथैव नान्यान्याचक्षीरन् जनाः ॥

